श्रीगणेशाय नमः ॥ समाप्ते श्रावणे मासि भाद्रपदकृष्णपक्षे हलषष्ठीसंज्ञका ॥ तस्यां हलषष्ठीव्रतं वं
ध्यामृतवंध्यादिभिर्वा सुवासिनीभिर्दीर्घायुपुत्रपौत्रादिसंतानप्राप्त्यर्थं कार्यं ॥ स्नात्वा मध्या
ह्नसमय इत्युक्तेर्वा तस्मान्मध्याह्नव्यापिनी तिथिर्ग्राह्या ॥ ततः सुवासिनी पंचकमात्मनः
पूजास्थानं रंगवल्ल्यादिभिः कदलीस्तंभैश्च मंडितं कुर्यात् ॥ पंचपल्लवान्सहि
तसौभाग्यद्रव्ययुक्तं पंचवायनानि संपाद्य तत्र बदरीशाखां पलाशशाखां कुशस्त
बकाशस्तंबं भवानीशंकरयोः प्रतिमां पूजासामग्रीं च संपाद्य मध्याह्ने स्नात्वा धौतव
स्त्रावृत्ता शृंगाराभरणानि च धृत्वा सगीतवादित्रनिर्घोषैः सुवासिनीभिः सह पूजा
स्थाने प्रविश्य पूजा समारभेत् ॥ तत्र बदरीशाखादीनां रोपणं कृत्वा समंततो नूतन
नवस्त्रेणावेष्ट्य तदग्रे भवानीशंकरप्रतिमां स्थापयेत् ॥ ब्राह्मणैः स्थापनं कुर्यात्
इत्युक्तत्वात् तदभावे स्त्रिया कर्तुमशक्यत्वात् पतिना सह पूजा कार्येति युक्तमिति
प्रतिभाति ॥ तत्र संकल्पः ॥ सुमुखश्चेत्यादि मम इह जन्मनि जन्मांतरे च वंध्याकाक
वंध्यामृतवंध्यादिदोषपरिहारद्वारा दीर्घायुःश्रीविपुलकीर्तियुतपुत्रपौत्रध
नधान्याद्यविच्छिन्नसंततिप्राप्त्यर्थं अस्यां हलषष्ठ्यां भवानीशंकरप्रीत्यर्थं षोडशो

पंचारपूजां करिष्ये ॥ गणपतिपूजनादि कलशस्थापनांतं कृत्वा प्राणप्रतिष्ठां कुर्यात् ॥ अथ ध्यानं ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारं ॥ सदा वसंतं हृदयारविंदे भवं भवानीसहितं नमामि ॥ श्रीभवानीशंकराभ्यां नमः ॥ आगच्छ देव देवेश मर्त्यलोकहितेच्छया ॥ पूजयामि विधानेन प्रसन्नः सुमुखो भव ॥ आवाहनं ॥ पादासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितं ॥ भूषितं विविधै रत्नैः कुरु त्वं पादुकासनं ॥ आसनं ॥ शीतलं निर्मलं देव मया प्रार्थनया हृतं ॥ तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां ॥ पाद्यं ॥ गंधोदकेन पुष्पेण चंदनेन सुगंधिना ॥ अर्घ्यं गृहाण देवेश भक्तिं मे ह्यचलां कुरु ॥ अर्घ्यं ॥ दत्तमाचमनीयं च मया विश्वेश्वर प्रभो ॥ गृहाण परमेशान तुष्टो भव समाधये ॥ आचमनीयं ॥ नमोऽस्तु सर्वलोकेश योगमादेह धर्मधारिणे ॥ मधुपर्कं मया दत्तं गृहाण परमेश्वर ॥ मधुपर्कं ॥ पयसा च महादेव सर्वव्यापिन्महेश्वर ॥ स्नापनं क्रियते चाद्य प्रसन्नो भव सर्वदा ॥ पयस्नानं ॥ दध्ना चैव महादेव स्नापनं क्रियते मया ॥ गृहाण त्वं सुराधीश सुप्रसन्नो भवाव्ययः ॥ दधि ॥ सर्पिषा च महारुद्र स्नपनं क्रियते मया ॥ गृहाण श्रद्धया दत्तं तव तुष्ट्यर्थमेव च ॥ घृतं ॥ राम

इदं मधु मया दत्तं तव स्नानार्थमेव च ॥ गृहाण देवदेवेश ततः तुष्टिं प्रयच्छ मे ॥ मधु ॥ सितया
देवदेवेश स्नपनं क्रियते मया । ततस्त्वं तुष्टिमापन्नः प्रसन्नो भव सर्वदा ॥ शर्करा ॥
मंदाकिन्याः समानीतं हेमांभोरुह वासितं ॥ स्नानाय ते मया भक्त्या नीरस्वी क्रियतां
विभो ॥ ॥ शुद्धोदकस्नानं ॥ उक्तमंत्रैरभिषेकः ॥ वस्त्रसूक्ष्मं दुकूलं च देवानामपि
दुर्लभं ॥ गृहाण त्वं सुमाकांत सर्वदा रक्षको भव ॥ वस्त्रं ॥ यज्ञोपवीतं सौवर्णं ब्रह्मणा
निर्मितं पुरा ॥ आयुष्यं भव वर्चस्वं उपवीतं गृहाण मे ॥ यज्ञोपवीतं ॥ गृहाण नाना
भरणानि ह्रीं भौम हेम जांबूनद निर्मितानि ॥ ललाट कर्णोत्तम कंठ वक्षोभितं बह
स्तांगुलि भूषणानि ॥ आभरणानि ॥ श्रीखंड चंदनं दिव्यं मलयाचल संभवं ॥ विले
पनं सुरश्रेष्ठ गृहाण परमेश्वर ॥ गंधं ॥ अक्षतान् धवलान् शुद्धान् कर्पूरागुरु मि
श्रितान् ॥ गृहाण परया भक्त्या मया तुभ्यं समर्पितान् ॥ अक्षतान् ॥ हरिद्रा रंजिता
देव्याः सौभाग्यसुखसंपदा ॥ अतस्त्वां पूजयिष्यामि गृहाण परमेश्वरी ॥ हरिद्रा ॥
कुंकुमं कं सुकं दिव्यं कामना काम संभवं ॥ कुंकुमेनार्चिते देवी गृहाण परमे
श्वरी ॥ कुंकुमं ॥ चक्षुर्भ्यां कज्जलं रम्यं सुभगं नेत्रमंडनं ॥ लोचने मेषपये चारु

गृहाण परमेश्वरि ॥ कज्जलं ॥ विम्रोधनार्थं कच संचयस्य प्रदीयते कं कति कामयेषा ॥
करंडकं कुंकुम धारणार्थं गृहाण ते हे अपि विश्व मातः ॥ कंकति का करंडं च ॥ क
स्तूर्यो घोत्र्ययेगंधा भोगार्थं तमया हृताः ॥ नानापरिमलद्रव्यं गृहाण परमेश्वरि ॥
परिमलद्रव्याणि ॥ रूपया देवदेवेन्द्रो तव प्रीत्यर्थमेव च ॥ गृहाण तुभ्यं पुष्पाणि
मयानीतानि भो मृड ॥ पुष्पाणि ॥ अथांग पूजा ॥ शिवाय नमः ॥ पादौ० ईशानो० गु
ल्फौ० शंकरा० जंघे० गिरिजापतये० जानुनी० महेन्द्रा० ऊरू० सर्वभूतेन्द्रा० गुह्यं०
त्रिपुरांतका० कटिं० सोमेश्वरा० नाभिं० पशुपतये० उदरं० शंभवे० हृदयं०
वामदेवा० बाहू० नीलकंठा० कंठं० महादेवा० मुखं० त्र्यंबका० नेत्रे० चंद्रशे
खराय० ललाटं० गंगाधरा० शिरः० उमामहेश्वराभ्यां नमः सर्वांगं० ॥ त्रिदलं
त्रिगुणाकारं० ॥ वनस्पतिरसोद्भूतो गंधाढ्यः सुमनोहरः ॥ आघ्रेयः सर्वदेवा
नां धूपोयं प्रतिगृह्यतां ॥ धूपं ॥ साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया ॥
दीपं गृहाण देवेश त्रैलोक्य तिमिरापहं ॥ दीपं ॥ पायसापूपपक्वान्नं सर्वोपस्क
रसंयुतं ॥ नैवेद्यं गृह्यतां देव कृपां कुरु मम प्रभो ॥ नैवेद्यं ॥ गंगोदकं समानीतं स्नान

हेमकुंभेननिर्मलं ॥ एलाककर्पूरपुष्पाढ्यं आनीतं परमेश्वर ॥ मध्ये पानीयं ॥ उत्तरा
पोश्नार्थं वि आनीतं जलमुत्तमं ॥ गृहाण च मुमाकांत सर्व दुःख निवारक ॥
उत्तरापोश्नानं ॥ हस्तप्रक्षालनं ॥ मुखप्रक्षालनं ॥ कस्तूरिका समायुक्तं मलया
चलसंभवं ॥ गृहाणाचंदनं सोम करोद्वर्तन हेतवे ॥ करोद्वर्तनं ॥ कर्पूरेला
लवंगादि पूगीफल समन्वितं ॥ तांबूलं कल्पितं भक्त्या गृहाण गिरिजाप्रिया ॥
तांबूलं ॥ इदं फलमितिफलं ॥ हिरण्यगर्भेतिदक्षिणा ॥ दीपावलि समायु
क्तं भवानी त्रिलोचन ॥ आर्तिक्यं संगृहाणेदं मम ज्ञानप्रदो भव ॥ नीरा
जनं ॥ पुष्पांजलिं गृहाणेश मालत्यादिभिः ॥ तुष्टो मया सितं
देव प्रयच्छ मम धाधिप ॥ पुष्पांजलिं ॥ यानिकानी ति प्रदक्षिणा ॥ नमस्ते
त्वां विरूपाक्ष नील कंठ नमोस्तुते ॥ त्रिनेत्राय नमस्तुभ्य मुमा देहार्ध धारि
णे ॥ त्रिशूल धारिणे तुभ्यं भूतानां पतये नमः ॥ नमस्कारान् ॥ अन्य

धा स्मरणं० आवाहनं नजा० यस्य स्मृत्या०॥ इति पूजांसमर्प्य॥ ततो ब्राह्मण
पूजनं सुवासिनी पूजनं वायनदानं दद्यात् संभोज्य तद्दिने हलषष्ठ्यां
गोपयोदध्यादि वर्जं भुंजीयात्॥ श्वः प्रातर्विसर्जनं कृत्वा
पूजांपीठं ब्राह्मणाय दद्यात्॥ इति हलषष्ठी पूजा॥

राम
३